वासव (सस्मितं) अअवदिसव्ववअहोजामादीत्ति आणी एव्व ता किं एदेण कहाणुबन्धेण चरंतं एव्व चिदव्वदट्ठं।

सांकृत्या। एव्वं इन्दीवरिके प्रेक्षागृहमादेशय।

चेटी। एदु एदु भट्टिणी (सर्व्वाः परिक्रामन्ति)

सांकृत्या (विलोक्य) अहो प्रेक्षणीयता प्रेक्षागृहस्य!

आभाति रत्नशतशोभितशातकुम्भ-
स्तम्भावसिक्तपृथुमौलिकदामरम्यं।
अध्यासितं युवतिभिर्विजिताप्सरोभिः
प्रेक्षागृहं सुरविमानसमानमेतत् (२)॥ २ ॥

मनो। आरण्यके (उपसृत्य) जेदु जेदु भट्टिणी।

वासव। मनोरमे अदिकं दाखुसं आता गच्छ हलहुहणेवच्छं।

उभे। जं देवी आणवेदित्ति। (प्रविशति)

वासव। आरण्णिए एदेहिं एव्व मन्दङ्ग पिणद्धेहिं आभरणेहिं णेच्छभूमिं गदुअ अप्पाणं पसादेहि (आभरणान्य-

---

यथा—भक्ष्य चतियत् सामान्यवस्त्वपि मत्तेभानां मदमत्त गजानां कुम्भ प्रदेशं गतं सत् शृङ्गारताम् अलङ्करणीयताम् एति।

(२)—एतत् प्रेक्षागृहं आमोदमन्दिरं, सुरविमानसमानम् आभाति, विमानं सार्वभौमगृहभेदः। कीदृशं तत्? इत्याह—रत्नानां शतानि तैः शोभिताः ये शतकुम्भस्तम्भाः सुवर्णस्तम्भाः, तेषु अवसिक्तानि पृथुमौलिकानि दामानि यत्र तादृशं रम्यं मनोहरम्। किञ्च विजिताः अप्सरसः अप्सरोऽङ्गनाः यैः तादृशैः युवतिभिः अध्यासितम् अधिष्ठितम्॥

ष्ठादेवतार्थं आरण्यकायाः समर्पयति) मनोरमे ! तुमं विसलगिरिगहणपरितुट्ठेण तादेण अ उत्तस्सदिण्णाइं आभरणाइं इन्दिवरिआस आसादो गिह्निअ वच्छभूमिं गदुअ अप्पाणं मंडेहि जेण सरिसादो ससि भट्टाराअस्स।

मनो (इन्दिवरिकासकाशादाभरणानि गृहीत्वा सहारण्यकया निष्क्रान्ता)

इन्दीव। एदं आसणं उववसदु भट्टिणी।

वासव (आसनं निर्दिश्य) उपविशदु भअवदी।

उभे (उपविशतः)

॥ ततः प्रविशति गृहीतनेपथ्या (३) कञ्चुकी ॥

अन्तःपुराणां विहितव्यवस्थां पदेपदेऽहं स्खलितां निरुन्धन्।
जरातुरस्सम्प्रति दण्डनीत्या सर्व्वं नृपस्यानुकरोमि वृत्तम्(४)॥३

अज्ञापितोस्मि विमानिताशेषशत्रुसैन्येन यथार्थनाम्ना महसेनेन समादिश्यतामन्तःपुरेषु यथा श्वो वयमुदयनोत्सवमनुभवामः अतोयुष्माभिरुत्सवानुरूपवेषोज्ज्वलेन परिजनेन सह मन्मथोद्यानङ्गन्तव्यमिति।

---

(३)—गृहीतवेशा।

(४)—अहं अन्तःपुराणां विहितव्यवस्थां पदे पदे अस्खलितां यथास्थानया दण्डनीत्या निग्रहं रक्षन् रक्षां कुर्वन्—नृपस्य सर्वं वृत्तम् अनुकरोमि, नृपस्यैव दण्डनीत्या व्यवस्थारक्षकत्वात्। परमिदानीं जरातुरोऽभवमिति शेषः।

सांकृत्या। (कञ्चुकिनं निर्दिश्य) राजपुत्रि! प्रवृत्ता प्रेक्षा दृश्यतां

कञ्चुकी। तदेतदादेष्टव्यं परिजनेन सहागन्तव्यमिति।

गृहीतनेपथ्येति नादेष्टव्यम्। कुतः?—

पादैर्नूपुरिभिर्नितम्बफलकैः सिञ्जानकाञ्चीगुणैः
हारापादितकान्तिभिस्तनतटैः केयूरिभिर्बाहुभिः।
कर्णैः कुण्डलिभिः करैस्सवलयैः सस्वस्तिकैर्मूर्द्धजै-
र्देवीनां परिचारिकापरिजनोप्येतेषु संदृश्यते (५)॥४॥

न खलु किञ्चिदत्रापूर्व्वमनुष्ठेयं, केवलं स्वाम्यादेश-इति मत्वाहं समादिष्टः; तदाशेषं राजपुत्र्यै निवेदयामीति [ परिक्रम्यावलोक्य च ] इयं वासवदत्ता वीणाहस्तया काञ्चनमालयानुगम्यमाना गन्धर्व्वशाला प्रविष्टा, यावदस्याः कथयामि [ परिक्रमति ]

ततः प्रविशति गृहीतवासवदत्ता, नेपथ्यासनस्था। आरण्यका वीणाहस्ता काञ्चनमाला च॥

आर। हञ्जे कञ्चणमाले! कीसउण चिराअदि अज्जवीणा आरिओ।

---

(५)—नूपुरिभिः पादैः, सिञ्जानकाञ्चीगुणैः नितम्बफलकैः, हारैरापादिता सम्पादिताः कान्तयो यत्र तादृशैः स्तनतटैः, केयूरिभिः बाहुभिः, कुण्डलिभिः कर्णैः सवलयैः करैः, सस्वस्तिकैः मूर्द्धजैः उपशोभितः एष दृश्यमानः देवीनां परिचारिकापरिजनः एतेषु एव स्थानेषु सन्दृश्यते। इत एव आगच्छन् लक्ष्यते इति भावः॥

काञ्च। भट्टिदारिए! दिठ्ठोदेण एक्को उम्मत्तो तस्स वअणं सुणि अचिन्तिण भाविदो ओहसन्तो चिठ्ठई।

आर [सहस्ततालं विहस्य] हञ्जे सुठ्ठएद पुच्छदि सरिसा सरिसे दच्छन्तोति दुवेयत्थ उम्मत्ता।

साङ्कृत्या। राजपुत्रयाः सदृश माकारं पश्यास्य स्यान्ताभिता कारेणावश्यं त्वदीयां भूमिकां सम्भावयिष्यति।

काञ्चु (उपसृत्य) राजपुत्रि! देवस्त्वामाज्ञापयति ख्योऽवश्य मस्माभिर्वीणां वादयन्तीं श्रावितव्या तत्तया नवतंत्री-सज्जया घोषवत्या स्थेयमिति।

आर। जइ एव्वं लहुवीणाआरियं विसज्जेसि।

काञ्चु। एष वत्सराजं प्रेषयामीति (निष्क्रान्तः)

आर। कञ्चनमाले! उवणेहि मेघोसवदीं जावसे तन्तीओ परिक्खेमि।

काञ्चन [वीणां समर्पयति]

आर [उत्सङ्गे वीणां कृत्वा सारयति]

॥ ततः प्रविशति गृहीतवत्सराजनेपथ्या मनोरमा ॥

[स्वगत] चिराअदि महाराओ किण कहिदं वस्सन्तएण अहवा देवी एभा अदि ज इदाणिं आ अच्छे तदो रमणिज्जं हवे॥

॥ ततः प्रविशति राजा, अनङ्गुण्ठितशरीरो विदूषकश्च ॥

राजा। सन्तापं प्रथमं तथा न कुरुते शीतांशुरद्यैव मे,
निश्वासाः ग्लपयन्त्यजस्रमधुनैवोष्ठस्तथा नाधरम्।

सम्प्रत्येव मनो न शून्यमलसान्यङ्गानि नो पूर्व्ववत्,
दुःखं याति मनोरथेषु तनुतां सञ्चिन्त्यमानेष्वपि (६)॥५॥
वयस्य ! सत्यमेवोक्तं मनोरमया तथैषा मम प्रियसखी
महाराजस्य देव्या दर्शनपथादपि रक्ष्यते, तदयं समा-
गमोपायोद्य रात्रावस्माभि रुदयन् चरितं नाम
नाटकं देव्या पुरतो नर्तितव्यं तत्रारण्यका वासवदत्ता
भविष्यति, अहमपि वत्सराजः तच्चरितेनैव सर्व्वं
शिक्षितव्यं तदागत्य स्वयमेव स्वां भूमिकां कुर्व्वाणः
समागमोत्सवमनुभवत्विति।

विदू। ज इमं ण पत्तिआअसि एसा मणोरमा तव वेस
धारयन्ती चिट्ठई ता उत्तसप्पिअस्सं एव्व पुच्छं।

राजा [ उपसृत्य ] मनोरमे ! सत्यमिदं यद्वसन्तकोऽभिधत्ते

मनो। भट्टा स च मज्झ्म एदेहिं आभरणेहिं आप्पाण

[ इत्याभरणान्यङ्गादवतार्य्य समर्पयति ]

राजा ( परिदधाति )

विदू। एदे क्खु, राआणो दासी एवि एव्वं णच्चाविअंति अह्मो
कज्जस्स गुरु अदा ! !

---

(६)—शीतांशुः हिमकिरणः चन्द्रमा प्रथमं यथा सन्तापमकरोत्, अद्य तथा नैव कुरुते निश्वासाः यथा प्रजस्रं निरन्तरं म्लपितवन्तः क्लेशितवन्तः, अधुना तथा नैव म्लपयन्ति; ओष्ठोपि तथा न म्लपयति; अधरमपि तथा न म्लपयति; सम्प्रति मनोपि पूर्व्ववत् नैव शून्यम्; अङ्गान्यपि पूर्व्ववत् नो अलसानि। कुतः ? इत्याह—मनोरथेषु अभिलषितवस्तुषु सञ्चिन्त्यमानेष्वपि दुःखं तनुतां याति यत इत्यर्थः॥

राजा [ विहस्य ] मूर्ख ! नैष कालः परिहासस्य, निभृतेन चित्रशालां प्रविश्य मनोरमया सह सम्मन्त्र्य पश्यता स्थीयतां [ उभौ तथा कुरुतः ]

आर। कञ्चणमाले ! चिट्ठदु विणापुच्छिस्सं दाव किंवि।

राजा। शृणोमि तावत्कामनीय उद्देशवर्तत इति [अवहितं शृणोति ]

काञ्च। पुच्छदु भट्टिदारिआ आरण्णस्स च एव्वतादामदि एव्वं जहा अइ वीणां मादअन्तो अवहरेदिमं वच्छराओ अवससम्बन्धणादो मुच्चे मित्ति।

राजा। [प्रविश्य पटाक्षेपेण सहर्षं वस्त्रान्ते ग्रन्थितं बध्नाति] एवमेवत् कः सन्देहः।

सपरिजनं प्रद्योतविजयमुपनीय वादयन् वीणां।
वासवदत्तामुपहरामि न चिरादेव पश्याम्यहम् (७)॥६॥
यः सु सन्निहितं सर्वं योगंधरायणेन॥

मए उणजाणिदं अज्ज उत्तो एसोत्ति साहु मणोरमे ! साहु२ सोहणं णव्विदं।

सांकृत्या०। स्थान एव कृता स्ते भ्रान्ति मनोरमया, पश्य— रूपन्तन्नयनोत्सवास्पदमिदं वेषस्स एषोज्ज्वलः।
सा मत्तद्विरदोचिता गतिरियं वत्स ! त्वमत्यूर्जितं

---

(७)—वीणां वादयन् प्रद्योतं विजयम् उपनीय वासवदत्ताम् उपहरामि न चिरादेव अचिरात् नैवेत्यर्थः—इति अहं पश्यामि प्रत्यक्षएवेत्याशयः।

लीला सैव सएष सान्द्रजलदह्लादानुकारी स्वरः
साक्षाद्दर्शित एष नः कुशलया बूयात् सएवानया (८) ॥७॥

वासव। हञ्जे इन्दीवरिए! बधेण अअउत्तेण अहं वीणं
सिक्खाविदा तासिकरेहि णिलप्पलदाम एण सिअलिं
[ शिरसोपनीय नीलोत्पलदामार्पयति ]

इन्दी [ तथा कृत्वा पुनस्तथैवोपविशति ]

आरण्य। कांचनमाले! कहेहि कहेहि।
णं सब्ब एब्ब मंते दिता दोजइ वीणं वादअन्तो।
अवहरदिनं वत्सराओ तदो अवसस्सं बन्धणादो मुंचेमित्ति ॥८॥

काञ्चन। भट्टिदारिए! स ब्बं तहा करेहि जइ वच्छराअस्स
अवसस्सं बहुमदा होसी [निष्पादितमेव काञ्चनमालया
तदस्माभिरालपितम्।

आरण्य। अइ एब्बं ता आदरेण वादईस्सं [ गायन्ती
वादयति ]
धणबन्धणसंरुद्धं गअणं दट्ठमाणसं णेउं।
अहिलसदू राअहंसो दइ अधलूण अप्पणोवसइ ॥८॥

विदू। [ निद्रां नाटयति ]

---

(८)– इदं रूपं मद्दृष्टं साक्षाद्दर्शिविषयं त्वदीयमिति यावत्, तस्याः मञ्जीर-मायाः नयनोत्सवस्य आस्पदम् स्थानम् अभूदिति शेषः, तद्गतचित्तत्वात्; एषः उज्ज्वलः वेषोपि स एव तन्नयनास्पदएव; एवमुत्तरत्र। अनया कुशलया मनोरमयैव साक्षा द्दर्शितः एषः प्रभूतः; अत इदानीं याचे– सएव वर्णितप्रकारएव सः नः अस्मान् बूयात् पृथक्कुर्यादिति खेदः॥

मनो [हस्तेन चालयन्ती ] वसन्तश्र ! पेक्ख पेक्ख प्रियसहि
 मे णश्चइ।

विदू (सरोष ) दास्रीए ! सुदे तुमं विणदेसिदेसु विदुं
 अद्दप्पहुदि पिअवअस्सेण आरखिआ दिट्ठा तदन्य
 हुदितेण सह मए दिवारंतं णिद्दा ण लद्धा ता णिक्क-
 मिअ सुविस्सं [ निष्क्रम्य शेते ]

आरण्य। (पुनर्गायति )
 अहिणवरा अक्खि त्ता महुअरि आवा मएण कामेण।
 उत्तमइ पत्यन्ती दट्ठं पिअदंसणदइअं ॥ १० ॥
 राजा (तत्त्वणं श्रुत्वा सहसोपसृत्य) साधु राजपुत्रि!
 अहो गीतमहो वादितं तथाहि—
 व्यक्तिव्यञ्जनधातुना दशविधेनाप्यव लब्धामुना
 विस्पष्टोद्रुतमध्यलम्बितपरिच्छिन्नास्त्रिधायं लयः।
 गोपुच्छप्रमुखाः क्रमेण यतयस्तिस्रोपि सम्पादिता-
 स्तत्वौजोनुगवाश्च वाद्यनिधयः सम्यक् त्रयो दर्शिताः(८)॥११॥

आरण्य ( वीणां परिष्वजासनादुत्थाय राजानं साभिलाषं
 पश्यन्ती ) उव्वज्भा अप्पणमामि।

---

(८) – दशविधेनापि अमुना श्रुतेन व्यञ्जनधातुना व्यक्तिः लब्धा ; द्रुता वृत्तिः, मध्यमा वृत्तिः, विलम्बिता वृत्तिः एवं तिसृभिर्वृत्तिभिः परिच्छिन्नः अयं लयः विस्पष्टः ; गोपुच्छप्रमुखाः तिस्रोपि यतयः क्रमेण सम्पादिताः ; तत्वादयोवाद्यनिधयोऽपि त्रयः सम्यक् दर्शिताः ; अतः प्रशस्यत इति भावः। सङ्गीतधीभिर्बोध्यमेतत् स्फुटं नान्यैरिति दिक्॥

राजा। (सस्मितं) यदहमिच्छामि तत्ते भूयात्॥

काञ्चन। (आसनं निर्दिश्य) इद एव्व उपविसदु उपआ-
रणिकायआमो।

राजा। (उपविश्य) राजपुत्रि! केदानीमुपविशतु।

काञ्चन। (सस्मितं) दाणिं एव्व भट्टिदारिआ विज्जामाणेण-
परितोसिदा तुह्मेहिं ता भरुहदि एव्वं एसा उव-
ज्झाअ पाठिआए।

राजा। उपविशत्वहेयमर्धासनस्य। राजपुत्रि! स्थीयतां।

आर। (काञ्चनमालां पश्यति)।

काञ्चन। (सस्मितं) भट्टिदारिए! उपविस को एत्थ दोसो
सिस्सविसेसा क्खु तुमं।

आर। (सलज्जोपविशति)

वासवदत्ता। (सलज्जं) भअवदिए अहि अक्कमिदव्वं
णहु अहं तस्सिं काले एकासणे अम्र उत्तीय सह
उवहिदा।

राजा। राजपुत्रि! श्रोतुमिच्छामि वादय वीणाम्।

आर। (सस्मितं) कञ्चणमाले! चिरं क्खु मम वादअन्तीए
परिस्समो जादो दाणिं विस्सहाइं अंगाइं ता ण
सक्कुणोमि वादयिदुं।

काञ्चन। उवज्झा सुट्ठु परिस्सन्ता भट्टिदारिआ कवी-
तलबन्धसे अलवाए पेक्ख सेवेवन्ति अग्गहत्था ता
समस्सत्था होदु मुहुत्तअं।

राजा। काञ्चनमाले! युक्तमभिहितं (हस्ते गृहीतु मिच्छति)

आर। (हस्तमपसारयति)

वासव। सासूअं भअवदि अइ एदं वितुए किदं वहुअहं
    कञ्चणमाला कव्वेण वंचइदव्वा।

साङ्कृत्या। (विहस्य) आयुष्मति! ईदृशमेव काव्यं भविष्यति।

आर।(सरोषमिव) वेहि कञ्चणमाले! २ ण मे बहु मदासि।

काञ्चन। [सस्मितं] जई अहं चिन्तन्ती ण बहु मदा ता एसा-
    गच्छामि [ इति निष्क्रान्ता ]

आरण्य। (ससम्भ्रमं) कञ्चणमाले! चिट्ठ २ अअंदे अगग
    हत्था समप्पिदो।

राजा। ( आरण्यिकाया हस्तं गृहीत्वा )

सद्योवश्यायविन्दुव्यतिकरशिशिर: किं भवेत् पद्मकोशो
ह्लादित्वं नास्य मन्ये सदृशमिदमुषस्येव वीतातपस्य।
मुञ्चत्येषो हिमौघं नखरजनिचरो हन्त! किं सोपि दाही
जातं खेदापदेशादविरतममृतं स्यन्दते व्यक्तमेतत्(१०)॥१२॥
    अपिच—

---

(१०)—सद्य: अवश्यायस्य कुज्झटिकाया: विन्दुर्य्येव एतादृशोपि पद्मकोश: किं व्यतिकर-शिशिर: भवेत् ? नेत्यभिप्राय:। इदं हि ह्लादित्वं वीतातपस्य अस्य उषसि एव सदृशं समयोचितं न मन्ये, आश्चर्य्यमेतदिति यावत्। नखसदृश कार: एष रजनिचरश्चन्द्र: हिमौघं मुञ्चति, हन्त इति खेदे, सोपि हिममुक् उपचन्द्रोपि किं दाही ?। इत्यत्र एतदेव व्यक्तम्—यत्, जातमपि अमृतं खेदापदेशात् हेतो: अविरतं स्यन्दते॥

एतेन बालविद्रुमपल्लवशोभापहारदक्षेण ।

हृदये मम त्वयायं न्यस्तो रागः स्वहस्तेन (११) ॥१२॥

चारख । [स्पर्शविशेषं नाटयन्ती] हवि २ एदं मणोरमं

परिसन्तीए अत्थं एव्व मे मज्जाइ करेत्ति ।

वासव । [ सहसोत्थाय ] भअवदि पेक्ख तुमं अहं उपमलि

अम परेमि पेक्खिदुं ।

साङ्कृत्या । राजपुत्रि ! धर्म्मशास्त्रविहित एष गान्धर्व्वो

विवाहः किमत्र लज्जास्थानं ? प्रेक्षणीयमिदम्—तं न

युक्तमस्थाने रसभङ्गं कृत्वा गन्तुम् ।

वासव । [परिक्रामति,इन्दीवरीं विलोक्य] भट्टिणि ! वस-

न्तओ चित्तशालादुवारे पसुत्तो चिट्ठइ ।

वासव । [निरूप्य] वसन्तओ एव्व एसो [विचिन्त्य] रक्खापिए

होदव्वं तावोधि अपुच्छि सन्दावणं (प्रबोधयति) ।

विदू । ( निद्राजडमुत्थाय सहसा विलोक्य ) मणोरमे

किमाविअआदो वअस्सो अहवणअदि एव्व ।

वासव । ( सविषादं ) अह अम उत्तो पवदि मणोरमा

दाणीं कहिं ।

विदू । एसा चित्तसालाए चिट्ठइ ।

मनोरमा । ( सभयं ) कहं असहा एव्वहि अ एकस्सि

---

(११)—त्वया एतेन स्वहस्तेन मम हृदये अयं रागो न्यस्तः । कीदृशेन स्वहस्तेन ? बालविद्रुमपल्लवस्य नवकिशलयपत्रस्य शोभाया अपहारे दक्षः तादृशेन ॥

देवीए मन्दिरं एदेण मुक्ख-वडुएण मसहा एव्व बुद्धिअ सव्वं आउलीकिदं।

वासव। (सरोषं हसन्ती) साहु मणोरमे! सोहणं तुए ण च्चिदं।

मनो। (सभयं कम्पमाना पादयोर्निपत्य) भट्टिणी खु अहं एत्थ अवरं भामि एदेणा क्खु हदासेणबलाहो अलङ्करणा ईङ्गहिअ दुव्वारट्टि देण इह निवद्धा ण उणामह अङ्कं इत्तो एसदो मुखणिक्कोसन्तरिओ ण वेण विसुदो।

वासव। हञ्जे! उठ्ठहि जाणि दं सं वसन्तओ क्खु आरणिआ उत्त तं णाउए सुत्तधारो।

विदू। अअं एव्व चिंतेहि कहिं आरणिआ कहि वसन्तओत्ति।

वासव। मणोरमे! सुगहिदं करिअवं आअच्छदाव पेक्खणीअंसे पेक्खह्म।

मनो। (स्वगतं) दाणीं समस्ससिहह्मि। [प्रकाशम्, विदूषकं करे बध्नाति] हदास दाणिं अणुभव अत्तणो दुव्वअस्स फलं।

वासव। (ससंभ्रममुपसृत्य) अज्जउत्त! पड़िदत्त एदं अमङ्गड़ं (इति पादयोः नीलोत्पलदामा नमयन्ती, सोत्प्रासं) सरिसदु अउत्तो जं मणोरमेत्ति करीअविलुप्पलदाम एण बन्धाविदोसि।

आरण्य। [सभयमुपसृत्य तिष्ठति]।

राजा। [सहसोत्थाय विदूषकं मनोरमाञ्च दृष्ट्वा। आत्म गतं] —कथं विज्ञातोऽस्मि [देव्या वैलक्ष्यं नाटयति]

साङ्कृत्या। [सर्व्वानवलोक्य—सस्मितं] कथमन्यदेवेदं प्रेक्षणीयकं संवृत्तं? अभूमिरयमस्मद्विधानां—इति (निष्क्रान्ता)।

राजा। [स्वगतं] अपूर्व्वोयं कोपप्रकारः! दुर्लभमत्रानुनयं पश्यामि! [विचिन्त्य] एवं तावत् करिष्ये (प्रकाशम्) देवि! त्यज्यतां कोपः।

वासव। को एस्स कुविदो कधं च कुपितासि?

राजा। स्निग्धं यद्यपि वीक्षितं नयनयोस्ताम्रा तथापि द्युतिर्माधुर्य्येऽपि सती स्खलत्यनुपदं ते गद्गदा वागियम्।
निश्वासा नियता अपिस्तनभरोत्कम्पेन संलक्षिताः
कोपस्ते प्रकटं प्रयत्नविधृतोप्येष: स्फुटं लक्ष्यते (१२)॥१४॥
[पादयोर्निपत्य] प्रसीद २।

वासव। आरण्णिए तुमं कुविदाति सम्भावअन्तो अज्जउत्तो

---

(१२)—प्रयत्नेन विधृतं धैर्य्यीकृतमन्तर्दुःखं यया तादृशस्या अपि ते तव कोपः प्रकटं यथास्यात् तथा स्फुटं लक्ष्यते। तथा हि—यद्यपि एवं ते वीक्षितं कृत्रिमं स्निग्धमस्ति, तथापि द्युतिः क्रोधजा स्वाभाविकी ताम्राऽभवत्। एवं ते इयं वाग् माधुर्य्या अपि अनुपदं स्खलती सती गद्गदा श्रूयते। निश्वासाः नियता अपि स्तनभरोत्कम्पेन संलक्षिताः भवन्तीत्यर्थः॥

पेए पसीदस्सि पसादअदिता उवःसप्प (हस्तेनाकर्षयति)

आरण्य।[सभयं] णहु अहं किंवि जाणामि।

वासव। आरण्णिए! तुमं कहं ण आणासि दाणिं दे सिक्खा-
वेमि इन्दीवरिए गह्लएदं।

विदू। होदि अज्ज! कौमुदी महुसवे तुह चित्तं अअव
हरिदुं वअस्सेण पेक्खणीअं अणुचिठ्ठिदं।

वासव। एदं तुह्माणं दुस्स अप्पेक्खि अहा सोभेजाअदि।

राजा। अलमयथा विकल्पनेन (१३) पश्य—

भ्रूभङ्गैः क्रियते ललाटशशिनः कस्मात्कलङ्को मुधा
वाताकम्पितबन्धुपुष्पसमतां नीतोधरः किं स्फुरन्।
मध्यश्चाधिककम्पितस्तनभरेणायं पुनः खिद्यते
कोपं मुञ्चत नैव चित्तहरणायैतन्मया क्रीड़ितम्(१४)॥१५॥

देवि! प्रसीद। [पादयोः पतति]

वासव। जाहे णिव्वुतं पेक्खणिअ ता एहि अभ्भंतरं एव्व
प्रविशाम [निष्क्रान्ता]

---

(१३)—अयथाविकल्पेन अवास्तविकसंशयेन अलम् आरोपितसंशयं माकार्षी रित्यर्थः॥

(१४)—अयि वासवदत्ते! त्वया मुधा स्वीयैः भ्रूभङ्गैः स्वस्यैव ललाटशशिनः कलङ्कः कस्मात् क्रियते? एवञ्च भ्रूभङ्गान् त्यजेत्यभिप्रायः। न च कदाचित् देव्याः कोपो लक्ष्यत इत्याह—देव्याः अधरः क्रोधात् स्फुरन् गद्गदवाचं प्रसूते इत्याशङ्का इथैव, अपितु वाता कम्पितबन्धुपुष्पसमतां नीतः, स्फुरन्निति किम्? एवं मध्यश्च स्तनभरः सन् अधिककम्पितः लक्ष्यते, अतः मध्यः पुनः खिद्यते इति न। मया च चित्तहरणायैव मच्चित्तं हरतु इति मत्वैव क्रीड़ितं न, अतो यावे कोपं मुञ्चतेति॥

राजा । [विलोक्य] प्रसादं मकृत्वैव कथं गता देवी ?

स्वेदाम्भःकणभिन्नभीषणतरभ्रूभङ्गमेकं रुषा त्रासेना-
परमुत्प्लुतोत्प्लुतमृगव्यालोलनेत्रोत्पलं ।
उत्पश्यन्नहमग्रतोमुखमिदं देव्याः प्रियायास्तथा
भीतश्चोत्सुकमानसश्च महति क्षिप्तोऽस्म्यहं सङ्कटे(१५)॥१६॥

तद्यावदिदानीं शयनीयं गत्वा देव्याः प्रसादनोपायं चिन्तयामि ॥

॥ इति निष्क्रान्ताः सर्वे ॥

## ॥ इति तृतीयोऽङ्कः ॥

॥ इति गर्भनाटकम् ॥

---

(१५)—अहं देव्याः तथा प्रियायाः इदं मुखम् अग्रतः उत्पश्यन् सन् भीतश्च उत्सुकमानसश्च भवामि, किञ्चैवमहम् महति सङ्कटे क्षिप्तः। एतदेव वर्णयति—स्वेदाम्भइत्यादिना॥

# चतुर्थोऽङ्कः ।

—:०:—

॥ ततः प्रविशति मनोरमा ॥

[ सोद्वेगं ] अहो ! दीह रोसद्दा देवीए कहं एत्तिअं कालं बन्धाए पिअसहिए आरणिआ उवरि अणुकम्पं अगह्नद्द ( सास्र ) सा तवस्सिणी असुणी बन्धणस्स किलेसेण तह णसंतप्पदि जहा भट्टिणो दंसण णिरासदाए ईरिसअसेदुक्खं जेण अज्ज एव्व अत्ताण वावादअन्ती मए कहं विणिआरिदाएदं दुत्ततं भट्टिणो णिवेदित्ति वसन्तअ भणिअ आअदह्मि ।

॥ ततः प्रविशति काञ्चनमाला ॥

कहं असेसन्तीएवि मए भअवईस गब्बाइणी णदिठ्ठा ? ( विलोक्य ) ता एदं विदाव मणोरमं पुच्छिस्सं (उपसृत्य) मणोरमे ! अविजाणासि ? कहिं भअईसं गच्चा अणित्ति ।

मनो । [ विलोक्य अश्रूणि प्रमृज्य ] हला ! कञ्चनमाले ! दिट्ठा किं उण ताए पओअण ? ।

काञ्चन । मणोरमे ! अज्ज देवीए अङ्गारवदीए लेहोपेसिदो

तस्सिं बाचिदेवप्प पुरस्स ण अणादिट्ठं सन्तप्पिदु आरद्धा देवी ताविणोदण-णिमित्तं ताए भअवदीं अणेसामि।

मनो। हला किं उण तस्सिं लेहे अलिहिदं।

काञ्चन। जा मम भट्टिणिआ सा तव जणणी एव्व ताए अत्ता दिट्ठ मातादोदेता तव किं एदं आअक्खिद एव्वं तस्स समहिअं संवच्छरं कलिंग-हदएण वधस्स तं पज्जुतं एदं उत्ततं अणिठ्ठं सुणिअओ वट्ठि देसं समत्थस्स भत्तुणोदे एव्व उदासीण तओ ओलंवि दुत्ति।

मनो। हला कञ्चणमाले! जदा दाव अअउत्तं तो भट्टिणीएण केण विवाह इव्वोत्ति भट्टिणा आणत्तं ता केण उणदाणीं सोलेहोसुणाविदो।

काञ्चन। अणुवाद अतुह्मिभूदाए ममा हत्यादोगह्वि असस्रं एव्व भट्टिणो एवा इदो।

मनो। तेण गच्छ तुमं एसा क्खु देवी ताए एव्व सहदं तन्न लहीएं चिट्ठइ।

काञ्चन०। एहि भट्टिणी-सआसं गमिस्सं (निष्क्रान्ता)

मनो। चिरं क्खु मे आरक्खिआ-सआसादो आअदा दिट्ठं च णिव्विणा सा तवस्सिणी अत्तणो जीविदेण कदाइ अवा हिदं भवे ता तहिं एव्व गच्छन्ति (इति निष्क्रान्ता)।

॥ इति प्रवेशकः ॥

॥ततः प्रविशति सोद्वेगा आसनस्था वासवदत्ता,
सांकृत्यायनी विभवतश्च परिवारः ॥

सांकृत्या। राजपुत्रि! अलमुद्वेगेन नेदृशो वत्सराजः कथमित्थं गतमपि भवत्या मातृष्वसृपतिं विज्ञाय वत्सराजो निश्चिन्तः स्थास्यति ?

वासव (सास्रं) भयवदि अदिउज्जुआदाणिं तुमं जद्य मएण कव्वं तस्स मम केरएण किं कज्जं अज्जआए जुत्तं मम एदं आलिहिदं सा उणणआणदि अज्जवि णारिसीण वासवदत्तेत्ति तुहउण एदं आरक्खिआए उत्ततं पच्चक्खं ता कहं एदं भणासि।

सांकृत्या। यतएव मे प्रत्यक्षं यतएव ब्रवीमि तेन कौमुदीमहोत्सवे त्वां हासितुं तथा क्रीड़ितुम्।

वासव। भअवदि एदं एत्थ एव्वं तह हसिदह्मि जेण भअवदीए पुरदो लज्जाए कहं विचिट्ठामि ता किं तक्केर काएकहाएणं एदेण एव्व पक्खवादेण एत्तिअभूमिं जिदह्मि ( इति रोदिति )

सांकृत्या। अलं राजपुत्रि! रुदितेन। नेदृशोव त्सराजः ( विलोक्य )

॥ ततः प्रविशति राजा विदूषकश्च ॥

राजा। वयस्य! क इदानीमभ्युपायः प्रियां मोचयितुम् ?

विदू। भो वयस्य! मुञ्च विसादं अहंद उवाअं कहइस्सम्।

राजा ( सहर्षं ) वयस्य! त्वरितमभिधीयताम्।

विदू। भो! तुमं दाव अणेअ समरसंघट्टप्पहारबाहुसलोपु पेक्खि अणेअ गजतुरअपाइक्कदुव्विसहबलसमुदिदो ता सव्वबलसन्दोहेण अन्तेउरं सुपड़िअं करिअ दाणिं एव्व आरक्खिअन्तो बाधेहि।

राजा। वयस्य! अशक्यमुपदिष्टम्।

विदू। किं एत्थ असक्कं जदो दाव कुज्ज वामण वुट्ठ कंचुइं व्वजिअ मणुस्सो अवरोस्सत्थि तहिं।

राजा। (सावज्ञं) किं असम्बद्धं प्रलपसि देव्याः प्रसादं मुक्ता नान्यः तस्या मोचणाभ्युपायः। तत्कथय कथं देवीं प्रसादयामि?

विदू। भो! मासोववासं करिअ जीविदं धारेहि एव्वं देवी चण्डी पसीदीस्सदि।

राजा (विहस्य) अलं परिहासेन कथय कथं देवीं प्रसादयामि?

धृष्टः किं पुरतोऽवरुद्ध्य विहसन् गृह्णामि कण्ठे प्रियाम्
किं वा चाटुशतप्रपञ्चरचना-प्रीतां करिष्यामि ताम्।
किं तिष्ठामि कृताञ्जलिर्निपतितो देव्याः पुरः पादयोः
सत्यं सत्यमहो! नवेद्मानुनयो तस्याः कथं स्यादिति(१)॥१॥

---

(१)—धृष्टः सन् पुरतः अवरुध्य विहसन् प्रियां कण्ठे गृह्णामि किम्? अथवा तां चाटुशतप्रपञ्चरचनया प्रीतां करिष्यामि? किं देव्याः पुरः पादयोः कृताञ्जलिः सन् निपतितः तिष्ठामि? अहो! कथम् तस्याः अनुनयः स्यात्—इति अहं न वेद्मि सत्यं सत्यं सत्यमेवेत्यर्थः।

तदेहि देवीसकाशमेव गच्छाव:।

विदू। गच्छ तुमं अहं उण दाणिं एव्व बन्धणोदो कहिं विपरिब्भ किअ आअदो ता ण गमिस्सं।

राजा (विहस्य, कण्ठे गृहित्वा, बलान्निवर्तयति) मूर्ख! आगम्यतां आगम्यताम् (परिक्रम्यावलोक्य च एत्य) देवी दन्तवलभीमध्यास्ते यावदुपसर्पामि (सलज्ज मुपसर्पति)।

वासव (सखेदम्) आसनादुत्तिष्ठति।

राजा। किं मुक्तमासनमलं मयि सम्भ्रमेण
नोत्थातुमित्थमुचितं मम तन्तुमध्ये!।
दृष्टिप्रसादविधिमात्रहृतोजनोऽय-
मत्यादरेण किमिति क्रियते विलक्षः (२)॥ २॥

वासव (मुखं निरुप्य) विलक्खो दाणिं तुम होसि।

राजा। प्रिये! सत्यमहं विलक्षः यत् प्रत्यक्षदृष्टापराधो भवति प्रसादयितुं व्यवसितोस्मि।

सांकृत्या (आसनं निर्दिश्य) महाराज! क्रियतामासन-परिग्रहः।

राजा (आसनं निर्दिश्य) एत एत देव्युपविशतु।

वासव (भूमौ उपविशति)।

---

(२)–अयि तन्तुमध्ये क्षीणमध्ये! मम सम्भ्रमेण अलम्? आसनं किं मुक्तम्? इत्थम् उत्थातुं न उचितम्। कुतोनिषिद्धमतद्दत्याह—दृष्टिप्रसादविधिमात्रेण हृत: अयं जन: अत्यादरेण किमिति विलक्ष: लक्षान्यथा मनोन्तरं क्रियते—इत्याशङ्कते इति शेष:।

राजा। आः कथं भूमौ उपविष्टा देवी ! अहमप्यत्रैवोपवि
शामि ( इति भूमावुपविशति कृताञ्जलिः ) प्रिये !
प्रसीद प्रसीद किमेवं प्रणतेपि मयि गम्भीरतरं कोप-
मुद्वहसि ?
भ्रूभङ्गं न करोषि रोदिषि मुहुर्मुग्धेक्षणे ! केवलं
नातिप्रस्फुरिताधरानवरतं निश्वासमेवोज्झसि ।
वाचं नापि ददासि तिष्ठसि परं प्रध्याननम्रानना
कोपस्ते स्तिमितोतिपीड़यति मां गूढ़प्रहारोपमः (२)॥२॥
[ इति पादयोः पतति ]

वासव। अदि सुहिदोणंसि किं दाणिं दुक्खिदं जणं
विस्सारेसि उठ्ठेहि को एत्थ कुविदो ।

सांकृत्या। उत्तिष्ठ महाराज ! किमनेन अन्यदेवतावदुद्वेग-
कारणमस्याः ।

राजा ( ससम्भ्रमं ) भगवति ! किमन्यत् ।

सांकृत्या ( कर्णे कथयति ) ।

राजा (विहस्य) यद्येवमलमुद्वेगेन मयापि ज्ञातं सिद्धयेवा-
स्मिन् प्रयोजने देवी तुष्टा वर्धतिष्यामीति नोक्तम्,

---

(२)—हे मुग्धेक्षणे ! भ्रूभङ्गं न करोषि, मुहुः केवलं रोदिषि, नाति प्रस्फुरिता-
धरा निश्वासमेव अनवरतम् उज्झसि त्यजसि, वाचमपि न ददासि प्रत्युत्तरं न
करोषीत्यर्थः, प्रध्याननम्रानना अन्यध्यानपरा नतवदना तिष्ठसि;—इत्यस्व ते तव
स्तिमितः बहुकालस्थितत्वात् अचञ्चलः भावः गूढ़प्रहारोपमः अन्तर्वेदनाबोधात्,
माम् अति पीड़यति ॥

अन्यथा कथमहं दृढवर्मा वृत्तान्ते विस्रब्धस्तिष्ठामि
मत्प्रतिपथान्यहानि तद्वार्तया आगतायाः? इदञ्च
तत्र वर्तते—

अस्मद्बलैर्विजयसेनपुरःसरैः शूरै-
स्तैराक्रान्तबाह्यविषयो विहितः प्रतापः।
दुर्गं कलिङ्गहतकः सहसा प्रविश्य
प्राकारमात्रशरणोऽशरणीकृतोऽसौ (४) ॥४॥

तदवस्थश्च तं—

निर्दिष्टाक्रान्तमन्दं प्रतिदिनविरमद्घोरदासेरवृत्तं
सध्वंसं संप्रलीनद्विपतुरगनरक्षीणनिःशेषसैन्यम्।
अद्य श्वो वा विभग्ने झटिति मम बलैः सर्वतस्तत्र दुर्गे
बद्धं युद्धे हन्त! भगवति न चिराच्छ्रोष्यसि त्वं
कलिङ्गं (५) ॥ ५ ॥

सांकृत्या। राजपुत्रि! प्रथमतरमेव भवत्याः कथितं मया
कथमप्रतिविधाय वत्सराजः स्थास्यतीति।

---

(४)—विजयसेनपुरस्सरैः शूरैः तैः अस्मद्वीरैः, विहितप्रतापः राजधानीस्थानां विपक्षुद्रदयात्, बाह्य विषयः राजधानीस्थः समुदायः आक्रान्तः। इदानीं सः कलिङ्ग-हतकः सहसा दुर्गं स्वराजाधानीस्थं प्रविश्य, प्राकारमात्रशरणः दुर्गप्राचीरमात्र-व्यवहितत्वात् तत्र सहायान्तराभावाच्च, इत्यम् असौ शरणीकृतः वशीकृतप्रायः॥

(५)—अयि भगवति! अद्य श्वोवा झटित्येव मम बलैः विजयसेनादिभिः तत्र दुर्गे सर्वतः भग्ने सति हन्त! कलिङ्गं युद्धे बद्धं इति न तु चिरात् श्रोष्यसि, अपितु अचिरादेव श्रोष्यतीति भावः॥

वासव। जइ एव्वं पिअं मे।

प्रविश्य [ प्रतिहारी ] जेदु भट्टा एसो क्खु विअअसेणो दिढ़वम्मं कंचुइ सहिओ हरिसाअ्अ, तुप्फुल्लोअणो पिअणिवेदिदुकामो दुवारे चिट्ठइ।

वासव [ सस्मितं ] भअवदि जह तक्केमि परिदोसिदम्हि अअउत्तेणेत्ति।

सांकृत्या। वत्सराजपक्षपातिनी खल्वहं न किञ्चिद्ब्रवीमि

राजा। शीघ्रं प्रवेशय तौ।

प्रतिहा। तहा [ इति निष्क्रान्ता ]

॥ ततः प्रविशति विजयसेनः कञ्चुकी ॥

विज। भोः कञ्चुकिन्! अद्य स्वामिपदा द्रष्टव्या इति यत्सत्यमनुपमं कमपि सुखातिशयमनुभवामि।

कञ्चुकी। विजयसेन! अवितथमेतत्। पश्य—

सुखनिर्भरो ऽन्यथापि स्वामिनमवलोक्य भवति भृत्यजनः।
किं पुनरपि बलविघट्टननिर्व्यूढ़प्रभुनियोगभरः (६) ॥६॥

उभौ [ उपसृत्य ] विजयतु स्वामी।

राजा [ उभावपि परिष्वजते ]

कञ्चु। देव! दिष्ट्या वर्धसे।

---

(६)--भृत्यजनः स्वामिनम् अन्यथापि अवस्थान्तरमपि अवलोक्य स्वामिदर्शनमात्रहेतोः सुखनिर्भरः भवति। किम्पुनः अरीबलानां विघट्टनेन निर्व्यूढ़ः सम्पन्नः प्रभोर्नियोगः येन तादृशः भरः भरणीयः भृत्य इत्यर्थः, एवञ्च तवातिशयसुखानुभवो भविष्यत्येव तत्र कः संशयः इत्याशयः।

हत्वा कलिङ्गहतकमस्मत्स्वामिनिविशिते निजे राज्ये।
देवस्य समादेशो व्यवस्थापितो विजयसेनेन (७)॥ ७ ॥

वासव। अइ भअवइ! अहिजाणासि एदं कञ्जुइं ?

सांकृत्या। कथं नाभिजानामि? ननु स एष यस्य हस्ते मातृष्वसा ते पुत्रिकामनु प्रेषितवती।

राजा। साधु विजयसेन! महाव्यापारोऽनुष्ठितः।

विज [ पादयोः पतति ]

राजा। देवि! दिष्ट्या वर्धसे प्रतिष्ठितो राज्ये दृढवर्म्मा।

वासव [ सहर्षं ] अणुगिहीदह्मि।

विदू। ईरिसे अब्भुदअसिं राअउले एदं करणिज्जं [ राजानं निर्दिश्य, वीणावादनं नाटयन् ] गुरुपुत्ति! [आत्मनोपवीतं दर्शयन्] बह्मणस्स सक्कारः। [आरण्यकां सूचयन्] सव्व बन्धना मोक्खोत्ति।

राजा ( वासवदत्तामपवार्य्य, चेटिकां ददत् ) साधु वयस्य!

विदू। होदि कहन्तुमं ण्हिं वि एत्थ समादिसासि ?

वासव ( सांकृत्यायनीमवलोक्य सस्मितं ) मोइदाइदासेण आरणिया।

सांकृत्या। किं वा तपस्विन्या मयवक्तव्या।

वासव। जह भअवदीए रोअदि॥

---

(७)—अस्मत्स्वामिनः आदेशात् युद्धानन्तरं तस्यैव निजे राज्ये, तस्मिन् निविशिते तत्रैव तमेव कलिङ्गहतकं हत्वा विजसेनेन मया भृत्येन देवस्य समादेशो व्यवस्थापितः प्रतिपालित इत्यर्थः॥

सांकृत्या । यद्येवमहमेव तावन्मोचयिष्यामि [इति निष्क्रान्ता]।

कञ्चु । इममपरं सन्दिष्टं दृढ़वर्म्मणा त्वत्प्रसादात् सर्वमेव यथाभिलषितं सम्पन्नं तदेते प्राणास्त्वदीयाः यथेष्टमिमान्विनियोक्तुं त्वमेव प्रमाणमिति ।

राजा ( सलज्जमधोमुखस्तिष्ठति )

विज । देव! शक्यमेव देवं प्रति विशेषं दृढ़वर्म्मणः कथयितुम् ।

कञ्चु । यद्यपि तुभ्यं प्रतिपादितायाः प्रियदर्शिकायाः अस्मद्दुहितुः परिभ्रंशान्न मे सम्बन्धो जायत इति दुःखमासीत् तथापि वासवदत्तायाः परिणेत्रापि त्वया तदुपनीतमेव ।

वासव [ सास्रं ] अय्य कञ्चुइ कहं मे भइणी परिभट्टा ?

कञ्चु । राजपुत्रि ! तस्मिन् कलिङ्गहतकावस्कन्दे विद्रुतेष्वितः स्ततोन्तःपुरजनेषु दिष्ट्या दृष्टामिदानीं न युक्तमत्र स्थातुमिति तामहं गृहीत्वा वत्सराजान्तिकं प्रस्थितः। ततः सञ्चिन्त्य तां विन्ध्यकेतोर्हस्ते निक्षिप्य निर्गतोस्मि। यावत्प्रतीपमागधाः तावत्कैरपि तत् स्थानं सह विन्ध्यकेतुना स्मर्तव्यतां नीतम् ।

राजा [ सस्मितं ] विजयसेन ! किं कथयसि ?

कञ्चु । तत्र चान्विष्यता मया न प्राप्ता । ततः प्रभृति नाद्यापि विज्ञायते क्व च गतेति ।

[ प्रविश्य ] मनो । भट्टिणि ! पाणसंसएव वट्टइ सा तवस्सिणी ।

वासव [सास्त्रं] किं उण तुमं पिअदंसणास्सं तं जाणासि ?

मनो। णहु पिअदंसणा उत्त तं जाणामि। एसा क्खु आर-
णिआ कालव्वपदेसे आणीदं विसं पाइआ पाअसस्स
एव्वट्ठदित्ति एवं मए णिवेदिदं ता परित्ताअदु भट्टिणी।
(इति पादयोः पतति)

वासव [स्वगतं] हद्धि हद्धि पिअदंसणा क्खु दुविही अन्तरिदं
आरणिआ उत्तं तेण अदिट्ठज्जणो खलोओ कदा इमं
असहा सन्भावइस्सदि ? ता एदं एत्थ जुत्तं [प्रकाशं,
सम्भ्रमं] मणोरमे! लहुअ इह एव्व आणेहि तं
णाअलो आदो गहीदवि सविज्जो अज्जउत्तो एत्थ
कुसलो।
(निष्क्रान्ता मनोरमा)

॥ ततः प्रविशति मनोरमया धृता सा विषवेग
मात्मानं नाटयन्ती ॥

आरण्य। हला मणोरमे! कीसदाणिं मं अन्धआर पवेसेहि।

मनो (सविषादं) हद्धि हद्धि दिट्ठि ह्रेसेअकं तं विसेण।

वासव (तां दृष्ट्वा) भट्टिणि! लहु परित्ताहि परित्ताहि गुरुई-
भूदं सेविसं। (ससम्भ्रमं, राजानं हस्ते गृहीत्वा)
अज्जउत्त! उट्ठेहि लहु विवज्जइ क्खु एसा तवस्सिणी
(सर्वे पश्यन्ति)

काञ्चु (विलोक्य) सुसदृशी खल्वियं राजपुत्र्याः प्रियदर्शनायाः
(वासवदत्तां निर्दिश्य) राजपुत्रि! कुत इयं कन्यका ?

वासव । अज्जविश्र केउणो हिदा तं वा दिश्रविजश्रसेणेण आणिदा ।

कण्व । कुतस्तस्य दुहिता ? सैवेयं राजपुत्री, हा हतोस्मि मन्दभाग्यः [ निपत्य भूमावुत्थाय ] राजपुत्रि ! इयं सा प्रियदर्शिका भगिनी ते ।

वासव । अज्जउत्त ! परित्ताहि परित्ताहि । मम भइणी विवज्जइ ।

राजा । समाश्वसीहि समाश्वसीहि, पश्यामस्तावत्—कष्टं भोः कष्टं भोः ! ! !

सञ्जातसान्द्रमकरन्दरसां क्रमेण
पातुं गतश्च कलिकां कमलस्य भृङ्गः ।
दग्धा निपत्य सहसैव हिमं नवैषा
वामे विधौ न हि फलन्त्यभिवाञ्छितानि (८)॥ ८ ॥

मनोरमे ! पृच्छतां तावत्— किं ते बोध इति ।

मनो । सहि! किं ते बोधोत्ति? (सास्रं, पुनश्चालयती) सहोश्चं भणामि किं ते बोधोत्ति ?

प्रिय [ अविस्पष्टं ] जं एदाए विणामए महाराश्रो दिट्ठइ [ इत्यर्द्धोक्ते भुमौ पतति ]

राजा [ सास्रं ]

(८)—सञ्जातसान्द्रमकरन्दरसां कमलस्य कलिकां पातुं भृङ्गः, क्रमेण गतः । सहसैव हिमं निपत्य नवा एषा कमलिनी दग्धा । अतउच्यते-- विधौ वामे सति अभिवाञ्छितानि न हि फलन्ति ॥

एषा मीलयतीदमीक्षणयुगं जातं ममान्धं दिशः
कण्ठोस्याः प्रतिरुध्यते मम गिरोनिर्यान्ति कृच्छ्रादिमाः।
एतस्या वसितं हृतं मम तनुर्निश्चेष्टता या गता
मन्येऽस्या विषवेगएव हि परं सर्वन्तु दुःखं मनः (८)॥८

वासव (सास्रं) पिअदंसणे! उट्ठेहि पेक्ख एसो महाराओ चिट्ठइ कहन्ते अणाविसेणट्ठा कि दाणिं मए अअ-रब्भं अज्जणन्तीए जेण कुविदा मं ण आलवसि तापसीद! उट्ठहि उट्ठहि, बाहुपुणो अवरज्भिहं [ उर्ध्वमवलोक्य ] हा देव्व हदअ किं दाणिं मए अवकिदं जेण एद्दवित्थं गदा मे भइणी आदंसिदा ( प्रियदर्शिकाया उपरि पतति )

विदु। भो वअस्स! कहं तुमं मूढो एव्व चिट्ठसि ण एसो विसादस्स कालो विसमाखुगई विसस्स ता दंसेहि अप्पणो विज्जापहावं।

राजा। सत्यमेवैतत्। ( प्रियदर्शिकामालोक्य ) मूढएवाह-मैतावतीं वेलान्तदहमेनां जीवयामि सलिलं सलिलं !!!

विदू ( निष्क्रम्य, पुनः प्रविश्य ) एदं सलिलम्।

राजा [ उपस्पृश्य, प्रियदर्शनाया उपरि हस्तं निधाय, मन्त्र-स्मरणं नाटयति ]

---

(८)—एषा इदम् ईक्षणयुगम् स्वकीयं मीलयति यदा, तदा मम दिशः सर्वस्याः आन्धं जातं सम्पन्नम्; यदा अस्याः कण्ठः प्रतिरुध्यते, तदा मम इमाः गिरः कृच्छ्रात् निर्यान्ति; यदा एतस्याः वसितं वाञ्छितं हृतं, तदा मम तनुः निश्चेष्टतां गता; हि यतएवम् अतोमन्ये—अस्याः विषवेगे एव सर्वं मनः दुःखमिति॥

प्रिय [ शनैरुत्तिष्ठति ]

वासव। दिट्ठिआ पच्चुजीविया भट्टणी।

विजय। अहो देवस्य विद्याप्रभावः!!

कञ्चु। अहो सर्व्वत्राप्रतिहता नरेन्द्रता देवस्य।

प्रिय (शनैरुत्थायोपविश्य च जृम्भिकां नाटयन्ती, सविसादमविस्पष्टं) मणोरमे! चिरं कखु सुत्तह्मि।

विदू। यस्स निरुढ़ं देवोदित्तणं।

प्रिय (साभिलाषं)।

राजा (तन्निरूप्य सलज्जं किञ्चिदधोमुखो तिष्ठति)

वासव [ सहर्षं ] अज्जउत्त! किं दाणिं वि एसा असण्हेव्वं करेदि?

राजा (सस्मितं)

स्वभावस्था दृष्टिर्न भवति गिरो नाति विशदा
तनुं सीदत्येषा प्रकटपुलकस्येव कर्णिका।
यथा चायं कम्पस्तनभरपरिक्लेशजनन
स्तथानाद्याप्यस्या नियतमखिलं शाम्यति विषम् (१०)॥(१०)॥

कञ्चु। [ प्रियदर्शिकां निर्दिश्य ] राजपुत्रि! एष ते पिदे रात्नाकरः पादयोः पतति।

---

(१०) — अद्यापि अस्याः नियतमखिलं विषं न शाम्यति। कुतोबुध्यत इत्याह— अद्यापि अस्याः दृष्टिः स्वभावस्था न भवति; गिरः न अतिविशदाः पूर्व्ववत् सम्पन्नाः इति शेषः, प्रकटपुलकस्य कर्णिका इव एषा तनुं सीदति, स्तनभरपरिक्लेशजननश्च अयं कम्पः दृश्यतएव। यथाचैव तथैव तथोक्तमिति भावः॥

प्रिय [ विलोक्य ] कहं कंचुई अमविण अवसु ( सास्रं )
हा तात ! हा अज्जुए !!

कञ्चु । अलं रुदितेन ? कुशलिनो ते पितरौ वत्सराजप्रभावात् पुनस्तदवस्थमेव राज्यम्।

वासव ( सास्रं ) एहि अलिअसीले दाणिं विदे भट्टणो आसिसेहिं दंसेहि ( कण्ठे गृहीत्वा ) दाणिं समस्सत्यम्हि।

विदू । होदि तुमं भट्टणीं गह्निअ कण्ठे एव्वं परितुट्ठासि बोदिअस्स पारिदोसिअं विसुमरिदम्।

वासव । वसन्तअ ! ण विसुमरिदम्।

विदू । ( राजानं निर्दिश्य, सस्मितं ) बोदि अपसारेहि हत्थं भट्टणीए अग्ग हत्थं दे पारितोसिअ दाविस्सं।

राजा ( हस्तं प्रसारयति )

वासव ( प्रियदर्शिका-हस्तमर्पयति )

राजा ( हस्तं प्रगृह्य ) किमनया संप्रत्येव कथमपि प्रसादिता।

वासव । को तुमं अगच्छदु पुड़मं एव्व ता देवदु अट्टिम।

विदू । मो माणणोआ क्खुदेवी मासे पहुड़िम्ह करेहि।

वासव ( राज्ञोहस्तं बलादाकृष्य प्रियदर्षिकामर्पयति )

राजा ( सस्मितं ! देवि ) प्रभवति कुतोन्यथा कर्तुं विभवः ?

वासव । अज्ज उत्त अदोवि परं किं दे पिअङ्करियदु ?

राजा। किमतः परम्प्रियं ? पश्य—

नि:शेषं दृढ़वर्मणा पुनरपि स्वाराज्यमध्यासितं
त्वं कोपेन सुदूरमप्यपहृता सद्यः प्रसन्ना मम
जीवन्ती प्रियदर्शिका च भगिनी भूयस्त्वया सङ्गता
किञ्च स्यादपरं प्रियं प्रियतमे ! यत् साम्प्रतं प्रार्थ्यते(११)॥११॥

तथापीदमस्तु भरतवाक्यम्—

उर्वीमुद्दामशस्यां जनयतु विसृजन्वासवो वृष्टिमिष्टा-
मिष्टैस्त्रैविष्टपानां विदधतु विधिवत् प्रीणनं विप्रमुख्याः।
आकल्पान्तञ्च भूयात् स्थिरसमुचिता सङ्गतिः सज्जनानां
निश्शेषं यान्तु शान्तिं पिशुनजनगिरो दुःसहा वज्रलेपाः॥१२॥

( इति निष्क्रान्ताः सर्व्वे )

## ॥ इति चतुर्थाङ्कः ॥

---

(११)—दृढ़वर्म्मना पुनरपि नि:शेषं स्वाराज्यम् अध्यासितम्, किञ्च त्वं कोपेन सुदूरम् अपहृतापि सद्यः मम उपरि प्रसन्ना, किञ्च भगिनी प्रियदर्शिका जीवन्ती अपिच त्वया भूयः सङ्गता। हे प्रियतमे ! अपरं प्रियं किं स्यात् यत् साम्प्रतं प्रार्थ्यते ? वर्णितप्रियेभ्योऽन्यत् प्रियं किमपि नास्तीति भावः॥

(१२)—वासवः इन्द्रः इष्टां यथाकालां यथापरिमितां वृष्टिं विसृजन् उर्वीं उद्दामसंस्यां शस्योत्पादन-प्रतिबन्धरहितां जनयतु, विप्रमुख्याः ऋत्विजो ब्राह्मणाः इष्टैः यागः त्रैविष्टपानां देवानां विधिवत् प्रीणनं विदधतु, सज्जनानां सङ्गतिः आकल्पान्तं कल्पकालमभिव्याप्य स्थिरा समुचिता च स्यात्, दुःसहाः वज्रलेपाः पिशुनजनगिरः नि:शेषं शान्तिं यान्तु च॥

## ॥ इति प्रियदर्शिका नाम नाटिका समाप्ता ॥